विवर्तमाने रजसी ततोऽभूत् वैश्वानरोऽग्निः स तमो निहन्ति ॥ ४३ ॥
यदा भरद्वाज उवाच पृथ्वी रजोऽहरेकं नदिह द्विधाऽभूत् ॥
शुक्लं च कृष्णं च तदर्द्धमर्द्धं पर्य्यायतो आयन पनद्ध्मे ॥ ४४ ॥

## पृथ्वीसूर्य्ययोः पौर्वापर्य्यविचारः

१—द्यौः सूर्य्यरूपा तपनीह या वा पृथ्वी प्रतिष्ठा प्रतितिष्ठनीयम् ॥
का तत्र पूर्वा कतरा पराभूदित्थं विपृच्छास्ति विदां समाजे ॥ १ ॥
तत्राग्निहोत्रे किल याज्ञवल्क्यः प्रवक्ति पृथ्वी समभूदिहाद्यः ॥
*प्रजापतिस्तत्र य आस तस्मात् पृथ्वी रसोऽग्रेऽग्निरजायतान्नात् ॥ २ ॥
प्राणः प्रजापत्यभिधोऽग्र आसीत् तत्राग्निना तन्महिमाऽभयद्वाक् ॥
वाचोऽर उत्पाद्य तदप्सुविष्टः पृथ्वीं ससर्जाधिरभूदिहाग्निः ॥ ३ ॥
आसीदियं वै पृथिवी तदा काल्वालीकृता नौषधिरत्र पृथ्व्याम् ॥
आसीत्तदानीं न वनस्पतिर्वा प्रजापतिं भोक्तुमगात् ततोऽग्निः ॥ ४ ॥
प्रजापतेर्याप् महिमा स यः स्वः सोऽपचक्राम ततोऽग्नयेऽस्मै ॥
ह्यौषधिः सोऽन्नमभूत् ततो वाग् भूयोपचक्राम स एव सूर्य्यः ॥ ५ ॥
तस्मादयं वायुरभूत् तदित्थं पूर्वं पृथिव्यास ततोऽभवद् द्यौः ॥
बृहस्पतेश्चाप्यदितेर्मतेऽसौ पूर्वं पृथिव्यास ततोऽभवद् द्यौः ॥ ६ ॥
पुत्रं परस्तात् पितरं त्ववस्तादपि भरद्वाज इहानुवक्ति ॥
तथाग्निपुत्रो वदते स केतुर्वैश्वानराग्नेरविरुद्धवर्द्ध ॥ ७ ॥
नाहं तन्तुं न विजानाम्योतुं न यं वयन्ति समरेऽतमानाः ॥
कस्य स्वित् पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा ॥ ८ ॥

[ ऋ. सं. ६ मं. ६ सू. ]

अग्ने नक्षत्रमजरमा सूर्यं रोहयो दिवि दधज्ज्योतिर्जनेभ्यः ॥ १ ॥

[ ऋ. सं. १० । १५६ ]

---

*प्रजापतिर्ह वा इदमग्र एक एवास । सऐक्षत—कथं नु प्रजायेयेति । सोऽश्राम्यत् स तपोऽतप्यत । सोऽग्निमेव मुखाज्जनयांचक्रे । तद् यदेनं मुखादजनयत तस्मादन्नादोऽग्निः । स ऐक्षत प्रजापतिः—अन्नादं वा इममात्मनोऽजीजने यदग्निम् । न वा इह मदन्यदन्नमस्ति यं वा अयं नाद्यादिति । कल्वाटी कृता हैव तर्हि पृथिव्यास । नौषधय आसुर्न वनस्पतयः । तदेवास्य मनस्यास । अथैनमग्निर्व्यात्तेनोपपर्य्यावर्त्त । तस्य भीतस्य स्वो महिमापचक्राम । वाग् वा अस्य स्वो महिमा वागस्यापचक्राम । स आत्मन्नेवाहुतिमीषे स उदमृष्ट । तत्र विवेद घृताहुतिं वैव पय आहुतिं वा—उभयं ह त्वेव तत्पय एव । सा हैनं नाभिराधयांचकार । केशमिश्रेव हास । तां व्यौक्षद् ओषं धयेति । तत ओषधयः समभवन् ॥ स द्वितीयमुदमृष्ट तत्रापरामाहुतिं विवेद घृताहुतिं वैव पय आहुतिं वा । सा हैनमभिराधयांचकार । सोऽजुहोत् । तत एव उद्-यास य एव तपति । ततोऽयं प्रबभूव—योऽयं पवते । तत एवाग्निः पराङ् पर्य्यावर्त्त स हुत्वा प्रजापतिः प्र चाजायत—अत्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत ॥ [ शत. २ कां. २ प्र. २ ब्रा. ]

परे ब्रुवन्तीह पुराभवद् द्यौस्ततः पृथिव्यस्ति यतस्त्रिधाग्निः ॥
तथाभूदुत्तमतोऽयमग्निर्यो मध्यमो यः प्रथमः प्रतीतः ॥ १० ॥
आकाशवाय्वग्निजलक्षितीनां क्रमेण सृष्टिं वदतां न पृथ्वी ॥
प्राक् सूर्य्यतः संभवतीति हेतोरग्नेरपां सृष्टिरभूत् ततोऽस्याः ॥ ११ ॥
स भौवनः प्राह तु विश्वकर्म्मा द्यावापृथिव्यौ सह ते अभूताम् ॥
गर्भे यथा संभवतीह जन्तोराशीर्षमापादतलं सहैव ॥ १२ ॥
*इमौ सहैवासतुरेतदग्रे लोकौ न तु द्यौः पृथिवी पृथक् स्तः ॥
काले कुतश्चिद् वियतोस्तयोर्योऽन्तरावकाशस्तदिहान्तरिक्षम् ॥ १३ ॥
इत्थं विदुस्तित्तिरयश्च पूर्वे स याज्ञवल्क्यश्च तथा ब्रवीति ॥
तेषां मते ह्येकमिदं त्रिधाऽभूद्देयं तथासौ वियदन्तरिक्षम् ॥ १४ ॥
यन्मण्डलं सौरमदोऽस्ति तस्य ग्रहा अनेके परितः क्रमन्ते ॥
पर्य्येति योऽन्त्यो ग्रह एषु तावन्मितः कदाचिद् रविकाय आसीत् ॥ १५ ॥
ज्योतिश्चयस्मा रविरेव तावान् विवर्त्तमानः स गतेरसाम्यात् ॥
विच्छेदयंस्त्वीयगतिं निजान्त्यरन्तरं ग्रहं तेन विनिर्म्ममे स्वम् ॥ १६ ॥
तथैव चार्वाक् च तथैव चार्वाक्—इत्थं ग्रहांस्तान् बहुधा विधाय ॥
गृह्णाति तानात्मभवानिदानीमपि स्वपर्य्यन्तपथप्रचारान् ॥ १७ ॥
अल्पाल्पमात्रत्ववशादमीषां ज्योतिः क्रमाद्ध्रासमगाद् ग्रहाणाम् ॥
आत्यन्तिकाग्निक्षयतस्तु चन्द्रादयः क्रमाद् यान्ति विनाशमन्ते ॥ १८ ॥
इत्थं विदुः केपि सहैककायात् पृथ्वीषु जातास्ववशिष्यतेऽर्कः ॥
आरम्भणानां रजसां सहत्वाद् द्यावापृथिव्योः सह संभवोऽन्यः १९ ॥
"कतरा पूर्वा कतरा पराऽयोः कथा जाते कवयः को विवेद ।
विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव॥२०॥ ऋ. सं १ मं. १८५ सू. १
इत्थं दुरूहत्वमुवाच पौर्वापर्य्येऽनयोः स्पष्टमृषिस्त्वगस्त्यः ॥
यद्यत्र सत्यं तदिहास्ति चिन्त्यं न स्वच यावद् ध्रियते यथावत् ॥ २१ ॥
अथेतरेऽर्वाञ्च इमे त्विदानीं पश्यन्ति *केचित्पुनरन्यथैव ॥
केतुश्च सूर्य्यश्च मही च चन्द्रः क्रमेण चत्वार इमे भवन्ति ॥ २२ ॥
वियत्यकस्मादयमग्निरेनं सोमं स्वदन् प्रज्वलिति प्रसह्य ॥
स आहरन् साममतीव दिग्भ्यः क्रमाज्ज्वलत्पिण्डमधत्त नाभौ ॥ २३ ॥
ज्वालामयः पूर्वमभूत् स केतुर्ज्वालां स कृत्स्नां क्रमशः प्रगृह्य ॥
पिण्डात्मतां याति स भाति सूर्य्यः सर्वेऽपि केतुप्रभवा हि सूर्य्याः ॥ २४ ॥
क्रमेण सूर्य्योऽग्निरयं ह्रसित्वा क्षारं बहिर्भागत्र निधाय काये ॥
अन्तर्भवन् संकुचितक्रमोऽसौ ज्वालां जहातीति मतेदियं भूः ॥ २५ ॥

---

*द्यावापृथिवी सहास्ताम् । ते वियती अब्रूताम्—अस्त्वेव नौ सह यज्ञियमिति । यदस्या यज्ञियमासीत् तदमुष्यामदधात् । तददश्चन्द्रमसि कृष्णम् । ( तै. सं. ५ । २ । ३ सै. ब्रा. १ । १ । ३ ताण्ड्य ब्रा. ७ । १० ) अनया श्रुत्या पृथ्वीचन्द्रयोः सजातत्वं लभ्यते न तु पृथ्वीसूर्य्ययोः । तथाप्यन्यत्र चन्द्रस्यान्तरिक्षवर्तित्वश्रवणादिह पृथ्वीसूर्य्ययोर्वियतोरेव वियत्त्वमभ्युपगच्छन्ति । अथवास्तु चन्द्रपृथिव्योरपि सृष्ट्यादौ सहावस्थानम् ॥

सोमोऽन्तरे यत्र चाद्रिश्चरोऽग्निर्मांम्यन् स सूर्य्यस्तपतामिमश्नन् ॥
सोमो यद्दिर्घोऽन्ततोऽग्निरस्याः पृथ्व्या अतेजस्विनि पार्थिवे च ॥ २६ ॥
यत्र त्वमुष्याः क्रमशः पृथिव्याः ह्रस्वोऽपि सोऽग्निः क्षयमाससाद ॥
यिनि.सृताग्निः स तदेव चन्द्रो विशुद्धसोमात्मक उद्बभूव ॥ २७ ॥
चन्द्रस्य चान्ये परितः क्रमन्ते गन्धर्वसंज्ञा अपि ताननूक्ताः ॥
नेद्धा प्रदृश्यन्त इति स्म हेतोरेनद्द्वयं नात्र विशिष्य वच्मि ॥ २८ ॥
गन्धर्वतामेत् तु कदाचिदुक्ता गन्धर्व आसीदपि जातु चन्द्रः ॥
य एव चन्द्रः परितः पृथिव्याः पर्य्येति पूर्वं पृथिवीयमासीत् ॥ २९ ॥
इयं तु पृथ्वी द्युमणिः पुरासीन् सूर्य्यस्तु केतुः स कदाचिदासीत् ॥
ये केतवः सन्ति त एव काले सूर्य्या भविष्यन्ति परे परेऽपि ॥ ३० ॥
केतुस्त्वकस्मात् स्वयमेव भूत्वा कालेन सूर्य्यं भ्रमति क्षितिश्च ॥
चन्द्रः क्रमादग्निनिरस्तकायः क्षीणोऽन्यदृश्योऽपि विलीयते खे ॥ ३१ ॥
सूर्य्योऽग्निहेतोः पृथुलोऽस्ति पिण्डः पृथ्वी ततोऽल्पास्ति ततोऽपि चन्द्रः ॥
सर्वेस्ततोऽप्यन्यपथप्रकाशाः सोल्कमा यान्ति निपातमुल्काः ॥ ३२ ॥
अग्निस्त्वहोरात्रिरयं तु सोमस्तयोर्मिथः संगतयोर्बलेन ॥
पर्य्यायतोऽन्तस्त्वरविद्युयोगाच्चत्वार एते प्रभवन्ति मासाः ॥ ३३ ॥
चिरेण पर्य्यायमुपेत्य सोऽयं सृष्टिक्रमः संभवते चतुष्पात् ॥
सृष्टिक्रमाणां तु चतुष्पदा स्याद्देशेऽपि कालेऽपि बहुत्वमेषाम् ॥ ३४ ॥

इति पृथ्वीसूर्य्ययोः पौर्वापर्य्यम् ॥

## द्यावापृथिव्योः स्वरूपम् ॥

द्यौः कोऽर्थ इत्यत्र मतद्वयं स्यात् प्राधान्यतस्तत्र च केचिदाहुः ॥
सूर्य्येन्दुताराग्रहसंकुलाङ्गं यद् दृश्यते व्योम तदस्ति सा द्यौः ॥ १ ॥
द्यौरेव संवत्सर उच्यते स्वेयांवान् प्रकाशः परित प्रवर्तते ॥
तदेवचक्रं सरला हि देवता मिथोऽन्वयाश्च किलैकतां गता ॥ २ ॥
संवत्सरो देवसमुच्चयोऽर्थना गाथोऽथना सर्वरसप्ररोहनाः ॥
द्यौरुच्यते व्योम तु लक्षितं हि तैस्ततो हि गौरेवकृतप्रवृत्तयः ॥ ३ ॥
यावत्तु सूर्य्येण निमीयते तद् ब्रह्माण्डमेतस्य कपालमर्द्धम् ॥
शार्द्धार्कभक्तं दिवमाहुरर्द्धं कपालमुर्वीघटितं तु पृथ्वी ॥ ४ ॥
* पृथ्वीयमेका वहुलेव ता मत्युयामिनी द्यौरच तथान्तरिक्षम् ॥
यथान्तरिक्ष खलु सेलयेव प्रतीयते तद्वदिय मता द्यौ ॥ ५ ॥ शत २।१।२।१६
ते सूर्य्यचन्द्रोडुगणा यनस्तान्नरभान्ति यस्या प्रवदामि ता द्याम् ॥
पृथ्वीं तु यस्या उपरिस्थ लक्ष्मापोऽग्नि प्रथा ओषधयो वनानि ॥ ६ ॥
शत १।२।२

सूर्य्योऽयमुयत्नभिधावति यामसौ स यन् धावति चाभिपृथ्वीम् ॥
वृत्तार्द्धवद् द्यौरिह दृश्यतेऽसौ पृथ्वी समा दर्शतलानुकारा ॥ ७ ॥
शत १ का २ प्र. २ ब्रा

---

* बहुलेव वा इयं पृथिवी । सेलयेवान्तरेव सेलयेवासौ द्यौ । उभे विद्वेना मत्युयामि-मौरतामिति ॥ ( शत. २।१।२।१६ )

* सूर्यस्तु न द्यौः स हि मध्यतस्तान् लोकान् विवृण्वन् वृणुते दिशश्च ॥
इत्याहयत्सार महर्षिरेवं बृहस्पतिर्वा नकुलोऽप्यवोचत् ॥ ८ ॥
ब्रह्म जज्ञानं प्रथमं पुरस्ताद् वि सीमतः सुरुचो वेन आवः ॥
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ९ ॥
( य. सं. १३।३ ) सा. सं. ४।३।९। अथर्व. स. ४।१।१ शत ७।२।६
पृथ्वी च सा द्यौश्च यथेह रूपं विधाय सर्गं कुरुते समग्रम् ॥
तत् काश्यपं रूपमतस्तमाहुः कूर्मं प्रजापत्यवतारं एषः ॥ १० ॥
द्यौः कश्यपस्योर्द्ध्वकपालमस्यैवाधः कपालं पृथिवी तदित्थम् ॥
द्यावापृथिव्योः स हि कूर्म उक्तः प्रजापतिः कश्यपरूप एकः ॥ ११ ॥
सर्वं जगत् कश्यपतः प्रजातं स कश्यपो द्यौः सहिता पृथिव्या ॥
रसप्रदो द्यौः स पिताऽथ माता योनिः पृथिव्यस्ति ततोऽस्ति सृष्टिः ॥१२॥
मतान्तरे व्योम न केवलं द्यौस्तत्रानिरक्तं तदिहान्तरिक्षम् ॥
पृथ्वीव सा द्यौश्च निरुक्तरूपावकल्पते मूर्तिमती प्रकाश्या ॥ १३ ॥
येयं प्रतिष्ठा पृथिवी मता सा यः सूर्य एषोऽस्ति दिवं तमाहुः ॥
द्यौरस्त्यहो रात्रिरियं तु पृथ्वी मध्ये तयोः सान्ध्यमिवान्तरिक्षम् ॥ १४ ॥

## द्यावापृथिव्योरसाभ्यां शरीरात्मानः ॥

येयं पृथिव्यस्ति जगत् प्रतिष्ठा वृत्तानुकाराऽखिलभूतयोनिः ॥
साग्नी तथाग्ना च दिवोऽथ सा द्यौरग्नी तथा द्या च भवेत् पृथिव्याः ॥ १५ ॥
सोमोऽयमन्यः स मतोऽन्तरिक्षे ततोऽप्यग्निरयमेतदस्ति ॥
सोमोऽयमन्नं जनयत्यथैते त्रयोऽग्नयोऽन्नाद इति ब्रुवन्ति ॥ १६ ॥
प्रत्येकमग्निं द्विविधं प्रतीयाच्चित्यं तथा तत्र चिते निधेयम् ॥
रयिर्यपुश्चित्यमिदं बहिर्वा प्राणोऽयमात्माऽन्तरतो निधेयः ॥ १७ ॥
चित्यो यथाधिक्षितिभूतसंघश्चित्यस्तथा दिव्यपि देवसंघः ॥
प्राणो निधेयस्तु चिते स भूमावग्निः प्रसिद्धः स दिवीन्द्र उक्तः ॥ १८ ॥
चित्योऽन्तरिक्षेऽस्ति च वायुरन्यः स स्पर्शलक्ष्यो मृदवग्नियोग्यः ॥
चिते निधेयः पुनरन्यवायुः प्राणोऽस्पृश्यन् सोऽखिलदेवयोग्यः ॥ १९ ॥
प्रज्ञामयः प्राण इहोमयास्मिन् सोऽप्योमय आत्मास्ति दिवो भुवश्च ॥
दिव्यात्मनो दैविकमस्ति देहं भौमात्मनो भौतिकमेनदाहुः ॥ २० ॥
आकाशवाय्वग्निजलानि मृत्स्ना पञ्चेह भूतानि भवन्ति पृथ्व्याम् ॥
एकैकभेदे च भवन्ति भेदा नाना विधास्तैर्निचितास्ति पृथ्वी ॥ २१ ॥
तथाग्निवाय्विन्द्रदिगिन्द्रभेदात् पञ्चैव देवा दिवि संनिविष्टाः ॥
एकैकभेदे च भवन्ति भेदा नानाविधास्तैर्निचितास्त्यसौ द्यौः ॥ २२ ॥
चिते निधेयेन सहैव चित्यो दिव्यश्च भौमश्च परस्परेण ॥
संसृज्य सत्त्वं सृजतस्ततोऽस्मिन् आत्मद्वयं भाति वपुर्द्वयं च ॥ २३ ॥

---

* अवस्ताद्धि दिव आदित्य —इति श्रुतेः सूर्याद् भिद्यते द्यौः ॥ शत ६।२।३।२।

यथा पृथिव्योर्यदिदं निरुक्तं तथान्तरीक्ष्यं पुनरत्र विद्यात् ॥
आत्मा शरीरं च यदन्तरिक्षाद् वायव्यमध्यात्ममिदं प्रतीयात् ॥ २४ ॥
तौ ब्रह्मणः पञ्चभिरत्र विग्रहे स्यातां नियुक्तौ द्युरसावनीरसौ ॥
पश्याम्यधिष्ठातृपवित्रजीवनाधियज्ञसाधारणभेदतो हि तौ ॥ २५ ॥

## मूलं हंसः शिव इति वैशेषिकात्मतन्त्रम् ॥

तथा ह्यधिष्ठातृतयात्र विग्रहे स्यातां यथा तौ नु तथा ब्रवीम्यहम् ॥
आजन्मसिद्धावपि कालतः क्रमादुपेत्य पोषं प्रतितिष्ठतो दृढम् ॥ १ ॥
मूलं शिवश्चेह निजं निजं तनौ तन्त्रं विनिर्वाहयतः पृथक् पृथक् ॥
एकैकतन्त्रे च पृथक् पृथक् पुनस्तन्त्राण्यनेकानि वितत्य रक्षतः ॥ २ ॥
मूलं स आत्मास्ति शिवः स आत्मा कलेवरे भौतिकदैविके द्वे ॥
यद्भौतिकं तत्र तु मूलमीष्टे शिवोऽधितिष्ठत्यपि दैविकं तत् ॥ ३ ॥
पृथ्व्येव मूलमिहास्य देहे स्याद् ब्रह्मग्रन्थिः परमा प्रतिष्ठा ॥
तं ब्रह्मग्रन्थिं प्रवदन्ति मूलाधारं ततः प्रस्फुरतीदमङ्गे ॥ ४ ॥
स्वाधारगं कुण्डलितं तु मूलं विद्युत्प्रभं बिसतन्तुसूक्ष्मम् ॥
व्यामार्द्धमात्रं तत एव भौमं बलं शिरोऽन्ते क्रमते शरीरे ॥ ५ ॥
योगादृते नास्ति तु कुण्डलिन्याः संचार ऊर्ध्वं हि तथापि तस्याः ॥
उद्भूय सूर्यांशुवदंशकोऽस्मिन् देहे शिरोऽन्तेऽस्ति स देहपालः ॥ ६ ॥
यावन्त एतेह शरीरयष्टौ शारीरका धातव उल्लसन्ति ॥
ते मूलमालम्ब्य समे स्थिताः स्युर्नाशं लभेरन् यदि मूलनाशः ॥ ७ ॥
सौरो रसो यः स शिवः प्रसिद्धो मस्तिष्कमेतस्य परा प्रतिष्ठा ॥
मस्तिष्कमाहुस्तु सहस्रपत्रं तदन्तरे ज्ञानमयः शिवात्मा ॥ ८ ॥
योगादृते नैव शिवो विचाली तस्यांशवः सर्वशरीरयष्टौ ॥
व्याप्ता अपि स्नायुभिरेव तेभ्यो ज्ञानं तनौ पादतलान्तमस्ति ॥ ९ ॥
अन्ये तु मूलस्य शिवस्य च स्वस्थानस्थितस्यैव विसारमाहुः ॥
वर्तिस्थदीपस्य यथार्चिरेवं देहे कियद्देशमिमे क्रमेते ॥ १० ॥
पृथ्वीरसः प्राक् प्रपदात् प्रविश्यते स ब्रह्मग्रन्थेर्हृदयान्तमास्थितः ॥
केशान्तमार्गाद् द्युरसः प्रविश्यते स ब्रह्मरन्ध्राद् हृदयान्तमास्थितः ॥ ११ ॥
प्रपद्य देहं प्रपदद्वयेनोदसर्पदूर्ध्वं भवतस्तदूर्ध्वम् ॥
अथोदरं तत् तदुरोऽभवच्च क्रमादुरो ब्रह्म तदित्थमासीत् ॥ १२ ॥
तस्मोदरं ब्रह्म तु शार्कराक्ष्या उपासतेऽथारुणयो हृदेतत् ॥
ब्रह्मैव मन्ये हृदयोदरे ते स्थिते नेह येनेष्यखिलं शरीरम् ॥ १३ ॥
यद्वा रसोऽस्या प्रपदाच्छरीरे प्रविश्य मूर्द्धानमुपैति सद्यः ॥
सोऽर्वाक् क्रमात् संभरणं प्रकुर्वन् संवत्सरेण प्रपदे स्थितः स्यात् ॥ १४ ॥
ततः शिशुः प्राग् बलमेति शीर्ष्णा कक्ष्यां बलेनोपविशत्यथायम् ॥
कालेन पादे बलमेव लब्ध्वा प्रोत्थाय भूयश्चरतीति केचित् ॥ १५ ॥
इत्थं भवेदग्निरसः शरीरं हीरामयं तेन हिरण्मयं तत् ॥
भूगर्भतोऽग्निः प्रतिपद्य तस्मिन् संवत्सरेण प्रतितिष्ठतीह ॥ १६ ॥

अथो रविः शीर्षकपालमध्ये केशान्तरन्ध्रे वपुरूर्ध्वसीम्नि ॥
प्रविश्य तालुस्तनमेत्य सौमप्राणेन योगं हृदयेऽभ्युपैति ॥ १७ ॥
सोमान्मनः षोडशभिस्तु वर्षैर्लब्ध्वा कला षोडश षोडशि स्यात् ॥
तथा च पूर्णे मनसि प्रतिष्ठामुपैति सूर्योऽपि स षोडशाब्दैः ॥ १८ ॥
आभ्यां तृतीयोऽग्निश्च हंस आत्मा हृत्पद्ममेतस्य परा प्रतिष्ठा ॥
तदन्तरे यद्दहरं वियत् तद्धामास्ति हंसस्य परं विधातुः ॥ १९ ॥
यथाग्नि मूलं स यथा शिवोऽयं तथैव हंसोऽपि सहास्त आत्मा ॥
मूलं शिवो हंस इति त्रयस्ते त्रैलोक्यनाथाः सह चैक आत्मा ॥ २० ॥
आदाय चादाय दिवः पृथिव्या रसानयं मिश्रयते मिथस्तान् ॥
न्यूनातिरेकोपगमात् पृथग्वत् स देहधातून् विदधाति हंसः ॥ २१ ॥
त्वगृक्तमांसानि वपादिमेदोऽस्थिमज्जशुक्राणि च भूरसात्स्युः ॥
नाडीशिरस्नायव एषु शाखा संस्थानवर्णाश्च दिवोरसात् स्युः ॥ २२ ॥
दशेन्द्रियार्थेन्द्रियशक्तिमूलं मस्तिष्कपिण्डश्च दिवोरसम् स्युः ॥
तदिन्द्रियाद्यायतनानि भूतोत्थानि सर्वाणि भुवो रसात् स्युः ॥ २३ ॥
यावत्य एवेह शरीरवृत्तौ चेष्टाः क्रिया याश्च वरं च किञ्चित् ॥
हंसस्य चायत्तमिदं समग्रं हंसे गते सर्वमिदं गतं स्यात् ॥ २४ ॥
एषां त्रयाणामपि तत्र तत्रैतस्मिन् शरीरे स्थितिहेतवः स्युः ॥
त्रयस्त एवेह सहोदितानामेकव्यपाये नियतं व्यपैति ॥ २५ ॥
तथापि हंसः प्रथमः प्रधानं मूलं तदन्यक्तं च शिरस्तदन्तरूक्तं ॥
हंसस्तु मातुर्जठराग्निनायं कृतं हृदाकारमनूदितः स्यात् ॥ २६ ॥
त्रीनप्यमूनेव विशिष्य देवास्त्रैलोक्यनाथान् प्रतिपादयन्ति ॥
सर्वेऽपि वेदा अत एवमन्ये कश्चिन्महर्षिं क्वचिदेवमाह ॥ २७ ॥
ये अर्वाङ् उत वा पुराणे वेदं विद्वांसमभितो वदन्ति ॥
आदित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हंसम् ॥ २८ ॥

## अपानः व्यानः प्राण इति—पवित्रात्मतन्त्रम्

अथो पवित्रं प्रतिपादयामस्तच्चेह देहे पवते बहिर्वत् ॥
यावत् पवित्रं पवतेऽत्र तावत्न पूयत मूत्रमलामयाद्यैः ॥ १ ॥
यथा सुपक्वे फल पिप्पले रसोऽनुरक्त आभाति सुचर्मकोमले ॥
तथाग्निपाकेन रसोऽसृगस्त्यसौ चिरं स्थिरो येन पवित्रमस्ति तत् ॥ २ ॥
आदित्यतः प्राण उदेति वायुर्भवत्यपान पृथिवीरसेन ॥
तयोस्तु योगो हृदि यत्र तत्र व्यानोऽन्तरिक्षात् स्वयमभ्युपैति ॥ ३ ॥
प्राण स उत्क्रामति यो हृदूर्ध्वं योऽवाङ् इतः क्रामति सोऽस्त्यपानः ॥
एतौ गृहीतौ खलु येन सन्धिर्व्यानः स सन्धायक एतयोः सः ॥ ४ ॥
नाड्य शतं स्यु प्रतिनाडि ताः शतं पुनः सहस्राणि भवन्ति तास्वपि ॥
द्वासप्ततिश्चैन भवन्ति कोटयो द्वासप्ततिर्व्यान इहावतिष्ठते ॥ ५ ॥
न प्राणतो वायमपानतो वा जीवेद् यदि व्यान इहैव न स्यात् ॥
प्राणोऽप्यपानोऽप्यमुनेव योगात् स्तब्धो रसानेति दिवो भुवश्च ॥ ६ ॥

अयं पवित्रं पवतेऽत्र यो यं स पक्वयेद्धि पवने पवित्रः ॥
अन्तःप्रविष्टः पुरुषे तु स प्राङ् प्रत्यङ् च तस्माद् भवतः पुनर्द्वौ ॥ ७ ॥

का. प्र. प्रा. पं.
(शत. १ । १ । ३ । ३)
" १ । ७ । १ । १२

य एति सूर्यं हृदयान्तमेष प्राणः प्रयन् सूर्यमुदान एषः ॥

शत. १ । ३ । ३ । ५

पीताशितं यो गिलतीह येनोच्चरत्ययं प्राण उदानवृत्तिः ॥ ८ ॥
य एति भूमेर्हृदयान्तमेतं समानमाहुर्भुवमन्त्यपानः ॥
यद्धि स्थविष्ठं तदणिष्ठमन्नं भुक्तस्य धातुं कुरुते समानः ॥ ९ ॥
प्राणोऽप्युदानो रविरश्मिवृत्ती अग्नेरपानश्च समान एषः ॥
व्याने तयोर्यावदियं धृतिः स्यात् प्राणेन विष्वग्धमिदं च तावत् ॥ १० ॥
मैथुनानित्थमुवाच शाकायन्यो महर्षिर्मरुते नृपाय ॥
अपानतोऽन्नं ध्रियते शरीरे त्विदमैतरेयो भगवानुवाच ॥ ११ ॥
प्राणस्त्वपाने भवतीन सोऽङ्गुल्यग्रेभ्य आसं चरन्तीह तद्वत् ॥
विपर्ययात् प्राणमयस्तु सोऽङ्गुल्यग्रेभ्य आसं चरति ह्यपानः ॥ १२ ॥
तौ संहितौ तौ भवतश्च संततौ व्यानोऽप्युदानोऽपि तथैव पर्ययात् ॥
सुसंहितौ संभवतश्च संततावित्याह चित्यामिह याज्ञवल्क्यकः ॥ १३ ॥
प्राणोऽस्त्युपांशुग्रह एव मन्तर्यामग्रहोऽपान इमौ तृतीयम् ॥
व्यानं तु नोपांशु सर्वं जहीतः सोऽग्निर्ह्युपांशुः सपत्नोऽत्र सोमः ॥ १४ ॥
परामवत्येव उपांशुरन्तर्यामं तथा तं स विपर्ययेण ॥
परस्परामर्द्दनतोऽन्तरात् तावोप्यय सुगाते स शरीरगोऽग्निः ॥ १५ ॥

## वैश्वानरः तैजस प्राज्ञः इति–प्रत्युत्पन्नात्मतन्त्रम्

यः प्रक्रमोऽप्यो यत एव देहे प्रातीतिरवात्मान इहोदयन्ते ॥
सचेतनाचेतनयोर्व्यवस्था यतस्तमत्र प्रतिपादयामि ॥ १ ॥
अचेतने वाऽङ्कुरचेतने वा सचेतने वा निखिलेऽपि सर्गे ॥
पृथ्वीरसेन द्युरसोऽनुगम्य त्वात्मानमेकं सृजति द्वियोगात् ॥ २ ॥
द्यावापृथिव्योरसयोस्तु योगे पात्रं रसोऽस्याद्युरसो निधेयः ॥
द्विधो रसे पात्रमिते स आत्मा वैश्वानरप्राण उदेति देही ॥ ३ ॥
पृथ्वी तु विश्वं पृथिवी रसो नरो द्यौर्विश्वमेवं द्युरसो नरः परः ॥
विश्वानराख्यामितरेतरान्वयादभूत् स वैश्वानर उच्यते ततः ॥ ४ ॥
अथान्तरीक्ष्योऽपि रसोऽत्र वायुः पात्रे द्वितीयं भुवि संनिधत्ते ॥
भूयाग्नतश्चेद् द्युरसोऽधिकः स्यात् स तैजसः स्यात् परपात्रमात्र ॥ ५ ॥
ततोऽपि यत्र द्युरसोऽधिकः स्यात् प्राज्ञः स इन्द्रो ध्रियतेऽन्य आत्मा ॥
इत्थं त्रिधात्मा दिव त्रिभिः स संज्ञा द्वाभ्यां इमा धातव एकनः स्युः ॥ ६ ॥
तेजो रविप्राणरसः स वर्द्धने स वर्द्धितस्तैजस उच्यते ततः ॥

प्रज्ञा रवेरेव मनोरसः स च प्रवर्द्धते प्राज्ञमिमं ततो विदुः ॥ ७ ॥
दिवो रसे भूरसवच्च संहितान्येकत्रवाक् प्राणमनांसि चक्षते ॥
स्वजातिसंसर्गवशात् त्रयोऽप्यमी वैश्वानराद्याः स्युरिदं मतं परम् ॥८॥
वैश्वानरः पार्थिव एव दिव्यः प्राज्ञस्तथा तैजस आन्तरीक्ष्यः ॥
त्रैलोक्यसंभूतविमिश्रपानप्रमाणतस्ते त्रय उद्भवन्ति ॥ ९ ॥
दिव्यं मनः प्राण इहान्तरीक्ष्यो वाक् पार्थिवी तित्तिरिभिर्निरूचे ॥
तेषां च संयोगवशादिमेस्युस्तस्मात् तथैतेऽत्र मतान्तरेपि ॥ १० ॥
वैश्वानरोऽसौ पुरुषः शरीरं व्याप्नोति चालोमनखाग्रदेशम् ॥
अनाहतः शब्द इहास्य घोषो विपच्यते तेन च भुक्तमन्नम् ॥ ११ ॥
मैत्रिश्रुतावित्थमुवाच शाकायन्यो महर्षिर्मरुते नृपाय ॥
आदित्यतो जायत एष वैश्वानरस्तनोराच्च च शाकपूणिः ॥ १२ ॥
विध्वंसमानोऽग्निरिवान्नमाहृतं पचेत् ततोऽस्मिन् प्रतिधीयते पुनः ॥
विध्वंसितो भौमरस स दिव्यतो रसात् समायुत्य परोऽग्निरुद्भवेत् १३
तथैव देहेपि यदन्नमाहितं वैश्वानरस्य प्रतिधीयते ततः ॥
विध्वंसितो भौमरसः स दिव्यतः संयुज्य वैश्वानर एव जायते ॥ १४ ॥
सहस्रशीर्षा स सहस्रनेत्रः सहस्रपादः पुरुषोऽयमग्निः ॥
वैश्वानरो व्याप्य वपुःसमन्तात् प्रादेशमात्रेण पृथक् पृथक् स्यात्॥१५॥
वैश्वानरं चाश्वपतिर्नृपः प्राक् ताण्ड्यश्रुतेस्तूपनिषद्युवाच ॥
तं याज्ञवल्क्यो दशमेतु काण्डेऽध्याये च षष्ठेऽचकथत् तथैव ॥ १६ ॥

१६। १०। ६।

अस्मत्त्रयेऽप्यत्र दिवो रसास्ते स्युस्तारतम्येन युतानि सर्गात् ॥
तत्तारतम्यात् प्रतिकक्षमेषां नाना विभागा बहुधा भवन्ति ॥ १७ ॥
काचाभ्रमुक्ताफलवज्रनीलमाणिक्यगारुत्मतपुष्परागाः ॥
अयश्च शुल्वं रजतं हिरण्यं तालादयोऽचेतनवर्गगा स्युः ॥ १८ ॥
इतश्चाग्रतस्योऽप्युलपाः क्षुपा वा तृणौषधी वृक्षगणा द्वितीये ॥
आरोहिणोऽस्फुटचेतनास्ते वैश्वानरस्तैजस एषु चात्मा ॥ १९ ॥
अथो तृतीये कृमयस्त्वपादा भूलग्नमापुच्छमुखं तदङ्गम् ॥
स्थानं त्यजन्त्येन चलन्त्य एता दृढं न भूम्या अगदद् गृहीताः ॥ २० ॥
यथा यथैषां द्युरसा निवृद्धास्तथैषु भूकर्षबलं ह्रसत् स्यात् ॥
ऊर्ध्वं भुवस्तिष्ठति देहमत्र स्तम्भा इवापुच्छमुखं तु पादाः ॥ २१ ॥
ततोपि वृद्धे द्युरसे लघुत्वान्मध्ये तनोः स्युर्बहवस्तु पादाः ॥
अष्टापदाः षट्पदपाक्षिणः स्युश्चतुष्पदाः पक्षिगणा द्विपादः ॥ २२ ॥
पृथ्वीविलग्नं तु शिरः क्रिमेः क्रमादूर्ध्वं भुवः कीटशिरोवतिष्ठते ॥
पशोः शिरः पुच्छसमं पतत्रिणां पुच्छाच्छिर साधु तिरः समुन्नतम् ॥२३॥
पशुर्मनुष्योऽस्ति तथापि तच्छिरो वक्षे विशिष्य द्युरसं ततः सदा ॥
विरुद्धदिक्स्थं भवति क्षितेरिदं द्युसंमुखं तस्य न पुच्छमुन्नतम् ॥ २४ ॥
इन्द्रातिशय्याश्च मनुष्यवाणियं विज्ञानसंपन्नतमाऽक्षरान्विता ॥
विद्या च वैज्ञानिक एव वेदयन् शास्त्रं हि निर्माति परोक्षमीक्षते ॥ २५ ॥

ततोऽपि वृद्धे घुरसे लघुत्वादस्कम्भपादा यद्वयोऽन्तरिक्षे ॥
जीवाः परे देवनिकायसंज्ञा अमूतलस्पृष्टपदा वसन्ति ॥ २६ ॥
ते चावरे द्वादशयोजनान्ताः परिस्रवे चन्द्रमसः परे स्युः ॥
परे रविज्योतिषि येतु सूर्य्ये तान् ब्रह्मसंज्ञान् परमान् वदन्ति ॥ २७ ॥
कृमिं समारभ्य नरान्तजीवे क्रमेण बुद्धीन्द्रियशक्तिवृद्धिः ॥
नरे स्युरेकादश चेन्द्रियाणि ज्ञानक्रियाशक्ति विशेषकाणि ॥ २८ ॥
देवेषु तेभ्योऽभ्यधिकास्तु शक्तयः प्रादुर्भवेयुः सहजाः स्वभावतः ॥
ता अष्टसिद्धीर्नव तुष्टिसंहिताः शक्तीः पुराणाः कपिलादयो विदुः ॥२९॥
देवा इमे यद्यपि सन्त्यदृश्यास्तथापि नो सन्ति न तेऽन्तरिक्षे ।
चिरादिहायावधि नूनमेषां क्वचित् क्वचित् प्रत्ययमावहन्ति ॥ ३० ॥
पुरायुगे काव्यमहर्षिकन्या, बभूव गन्धर्वधृता हि माद्री ॥
बालापि विज्ञानविशिष्टमर्थं, प्रोवाच साऽऽविष्टपरात्मयोगात् ॥ ३१ ॥
अद्यापि कुत्रापि नितान्तबालो बालाप्ययोग्या बहुशः प्रवक्ति ॥
वैज्ञानिकं चाप्यतदर्हमन्यं चार्थं क्वचित् तत्परमं प्रमाणम् ॥ ३२ ॥
सन्त्यम्बुबिन्दौ शतशस्तु कीटाः सन्त्यग्निहेतावपि कीटसंघाः ॥
साधारणा न प्रतियन्ति तांस्तान् वैज्ञानिकाः किन्तु विलोकयन्ति ॥ ३३ ॥
तथैव देवा अपि सन्त्यदृश्याः परीक्षया ते बहुशोऽनुभूताः ॥
ये तत्र न प्रत्ययमावहन्ति बाला हि ते ज्ञानकलास्वयोग्याः ॥ ३४ ॥
सिद्धर्षयस्ते कपिलादयः स्वे सांख्ये विदुः सत्त्वविशालसर्गान् ॥
अष्टप्रकारानपि चन्द्रलोकाधस्तात् परस्ताच्च सतुष्टिसिद्धीन् ॥ ३५ ॥
सश्रुश्रुतोऽसौ चरकश्च देहेऽन्यस्यात्मनोऽन्यस्य गतिं विवष्टे ॥
ग्रहांश्च तानाहुरिमे यथार्थं ब्रुवन्ति तत्तत्त्वमत प्रतीयात् ॥ ३६ ॥
स्तम्बादयो ब्रह्मपरा य एते शरीरिणो जन्ममृती भजन्ते ॥
ऊर्ध्वाधराः कर्मवशादमीषां विपर्य्ययाद्योनिगतौ मिथः स्युः ॥ ३७ ॥
द्यावापृथिव्यो रसयोस्तु यन्त्वादात्मान आमोक्षमिमे स्थिराः स्युः ॥
ते च प्रविष्टा मृतिजन्मचक्रे भवन्ति नानाविधयोनिभुक्ताः ॥ ३८ ॥
पृथ्वी च सा द्यौश्च यतोऽग्निरग्निस्तस्मादिमे द्वे अहनी तथापि ॥
कृष्णा मही रात्रिरहः सिता द्यौः सर्वोऽप्यहोरात्रगतस्ततोऽभूत् ॥ ३९ ।

## अन्नम्, ऊर्क्, प्राण–इति यज्ञात्मतन्त्रम्

प्रत्यर्थमौष्ण्यं परितोऽनुभूयते तस्माद् ध्रुवं तेष्वखिलेषु तेऽग्नयः ॥
नाग्निर्विनाघातमतोऽनुमीयते लोष्टेऽपि लोकद्वयतो रसौ चितौ ॥ १ ॥
औष्ण्यं हि वैश्वानरतोऽस्ति देहे वैश्वानरो यज्ञमयः स यज्ञः ॥
अस्त्यग्निसोमान्वयरूप इत्थं प्रत्यर्थमन्नादकृतोऽत्र भोगः ॥ २ ॥
न प्राणनिस्त्रंसनमस्ति यस्मिन् नान्नमहायास्य कदापि कामः ॥
अनाहुतेऽन्ने तु न यज्ञसिद्धिर्यज्ञं विना नाग्निरयं न चौष्ण्यम् ॥ ३ ॥
प्राणादपानाच्च मिथोऽनुघर्षाद्वैश्वानरोऽग्निर्भवतीह देही ॥
वैश्वानरो यत्र इहोपसन्ना देवा युतास्तैजसवायुरुक्थः ॥ ४ ॥

स तैजसो वायुरयं प्रपुष्टो मध्ये दधातीन्द्रमिदं त्रयं यत् ॥
प्राज्ञं तमाहुस्तत एव देहे चैतन्यमायाति स एष आत्मा ॥ ५ ॥
स वाङ्मयः प्राणमयो मनोमयो वैश्वानरस्तैजस इन्द्र एष यः ॥
त्रयः स आत्माऽव्यतिरिक्त एककः स च द्विधा व्यष्टिसमष्टिभेदतः ॥ ६ ॥
विस्रंसते प्राण इह स्वभावतः प्राणे गते क्लिश्यति तस्सितं मनः ॥
प्राणं पुनः स्रष्टुमिदं तु वाङ्मयं पीताशितं कामयतेऽत्र माहतम् ॥ ७ ॥
प्राणो द्विधा व्याप्रियते स केनचिद्भागेन विस्रस्य परेण युज्यते ॥
अन्नं समाहारयते तु केनचिद्भागेन सोऽन्नं परिगृह्य तिष्ठति ॥ ८ ॥
गृहीतमन्नं द्विविधं प्रवर्तते प्राणस्त्वदुस्सादिवसंमितं भवेत् ॥
प्राणं तु विस्रस्तमनेन पूरयेद् भूयोऽत्र चास्मिन् जनयेद् विशेषिताम् ॥ ९ ॥
अन्नं भवेद्भौमियमूर्क् तु सद्यः प्राणो भवेत् प्राण इहेतरे द्वे ॥
ऊर्क् चेतरे अन्नमपीतरौ द्वौ धत्ते मिथः संमह एव यज्ञः ॥ १० ॥
वैश्वानरोऽन्यः स च तैजसोऽन्यः प्राज्ञ च सोऽन्यः, स च चित्यतोऽन्यः ॥
चिते निधेयोऽन्य इहाहुते स्यान्न सोऽस्ति यो यज्ञ इहैव न स्यात् ॥ ११ ॥
वैशेषिकात्माथ पवित्रमात्मा संजीवनात्मा स च यज्ञ एतान् ॥
छन्दांसि मन्ये वयसां चरत्स्वच्छन्दः स्थिरं यज्ञ इहैव न स्यात् ॥ १२ ॥

## अग्निवायुरिन्द्र इति—साधारणात्मतन्त्रम्

आत्मत्रयाधातवशादपूर्वोऽयो य आत्मा न इहोद्गमन्ति ॥
वैश्वानराद्याः प्रतिदेहमेते भिन्नाः शरीरेण सहापियन्ति ॥ १ ॥
ते चाग्निवाय्विन्द्रमयाः शरीरं गृह्णन्ति चालोमनखाग्रदेशम् ॥
सत्याग्निवाय्विन्द्रकलास्ततोऽन्याः साधारणा काश्चिदिहेति मन्ये ॥ २ ॥
आकर्षिता येन बलेन पृथ्व्याममृताङ्कयष्टिप्रमुखाः स्युरर्थाः ॥
तदत्र साधारणमस्ति भिन्नं रूपं समन्ताद्यतु कृतभागे ॥ ३ ॥
आकर्षिता येन बलेन तूर्ध्वं धूमाग्निहेतिप्रमुखाः स्युरर्थाः ॥
तदत्र साधारणमस्ति भिन्नं समं समन्तान्न सहस्रपत्र ॥ ४ ॥
बले हिते सौरबलप्रसङ्गादुत्तिष्ठते सूर्यमभीदमङ्गम् ॥
आरुध्यते भौमबलात्तु वर्ष्म प्रसह्य पृथ्वीमनुभौतिकं यत् ॥ ५ ॥
देहे गुरुत्वं पृथिवीरसादिदं लघुत्वमस्मिन् द्युरसात्प्रजायते ॥
उत्थाय देहं भुवि यत्र तत्र यत्संचारयत्येष च तद्दिवो रसात् ॥ ६ ॥
मृतस्य देहेऽधिकमस्ति गौरवं तथास्तत्र गौरवमस्ति दैहिकम् ॥
दिव्याद् रसाद् यल्लघुतोपपद्यते जीवत्यतः सा गुरुता कनीयसी ॥ ७ ॥
स्थितो यदिच्छन् स्वकरं पदं वा स्तब्धं दिवि स्थापयति प्रसह्य ॥
तदप्यमुष्मिन् द्युबलेन सिद्धं नाडीशरीराकृतिरप्यमुष्मात् ॥ ८ ॥
यत्तूच्छ्रयन् द्राक् पतति क्षितावयं नेच्छन्नपि धामयमूर्ध्वमुच्छ्रलि ॥
देहं च मृत्यावपि नान्वलोकयं यदस्य तद् द्युमिरसात् प्रसिद्ध्यति ॥ ९ ॥
भुक्तं यदन्नं परिपच्यते ततो भूत्वा रसः कृत्स्नशरीरमश्नुते ॥

मलं त्वंपकं वहिरेत्य भुच्यणात् तथापि-तावेष रसौ प्रयोजकौ ॥ १०
इत्थं पृथिव्यांश्च दिवश्च मात्रया जीवोऽमुतश्च इति प्रवेश्यन् ॥
गां मातरं द्यां पितरं प्रवीम्यहं क्रोडेऽस्मि मातुः पितृदृष्टपालितः ॥११॥

## इति द्यावापृथिव्यधिकारः ॥

## ऋतसत्याधिकारः ( आर्तवाधिकारः )

१ स्नेहोऽस्ति रात्रिस्त्वहरस्ति तेजः कौषीतकिः पश्यति सर्वमाम्नाम् ॥
व्याप्तं तयोः स्निग्धमृतं नु तेजः सत्यं नु नाभ्यां परमस्ति किञ्चित् ॥ १ ॥
यत्राशनाया प्रथमास्ति यस्यान्योन्यं समन्वेतुमणु यतेते ॥
स्नेहः स वीतो यदणुनिशानाद् यत्राभिसरणान्यपि तद्धितेजः ॥ २ ॥
२ । ऋते च सत्ये च भयस्य नेत्रे ऋतं भृगुः सत्यमिहाङ्गिरास्तु ॥
सोमश्च वायुश्च तथाऽऽप एते स्निग्धा अनुष्णाभृगवोऽमृतरूपाः ॥ ३ ॥
यमोऽग्निरादित्य इति त्रयस्ते तेजोमया आङ्गिरसाश्च सत्याः ॥
भृग्वङ्गिरोभ्यामिदमस्ति विश्वं व्याप्तं त्वहोरात्रमिदं प्रवदाम् ॥ ४ ॥

| | | | | | |
|---|---|---|---|---|---|
| सोमःवायुः आपःअग्नि र्यम आदि | १ ऋतम्=भृगुः २सत्यम्=अङ्गिराः | १ऋतम्=स्नेहः २सत्यम्=तेजः | १ ऋतम्=२ सूर्य्यरसः २सत्यम्=१ वरुणपृथ्वी चन्द्ररसाः | १ऋतम्=सोमः २सत्यम्=अग्नि. | १ऋतम्= चन्द्रः २सत्यम्= सूर्य्यः |

ऋते सत्यमृते सत्यमिति । अयं वा अग्निर्ऋतम् असावादित्यः सत्यम् । यदि वा—असा-वृतम्, अयं सत्यम् । उभय वेतदयमग्निः तस्मादाह-ऋते सत्यमृते सत्यमिति ॥ ( शत. ६।४। ४।१० ) ॥ "ऋतमेव परमेष्ठि ऋतं नात्येति किञ्चन ॥ ऋते समुद्र आहित ऋते भूमिरियं श्रिताः—॥" ( तै. ब्रा. कां. १ प्र. ५ अ. ५ ) ॥ ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषि-ञ्चति ॥ सत्यं त्वर्तेन परिषिञ्चामीति प्रातः ॥ अग्निर्वा ऋतम् । असावादित्यः सत्यम् ॥ अग्नि-नैव तदादित्येन सायं परिषिञ्चति । अग्निनाऽऽदित्यं प्रातः ॥ ( तै. ब्रा., २। ,१। ११ ) ॥ ऋताग्निरग्निशब्देनैव प्रायेणाभ्यस्तो । सत्याग्निः स्विन्द्रशब्देन । ॥ "आग्नेयी च रात्रिः, ऐन्द्रमहः"-इत्यग्निहोत्रे तैत्तिरीयोक्तेः ( तै. ब्रा. २। १। २ )

"कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति । त आववृत्रन् सदनादृतस्या-दिद्घृतेन पृथिवी व्युद्यते ॥ ( ऋ. सं. ) ॥ पृथिवीं व्यूदुः"—इत्याथर्वणसंहितायां पाठः । ( ६। ३। २२। १ ) ॥ अनया ऋचा ऋतस्योत्तरदिगवस्थाने गम्यते । दक्षिणायनोपक्रमे वृष्ट्युपक्रमदर्शनात् । "यदा खलु वा असावादित्योऽन्यङ् रश्मिभिः पर्यावर्त्तते अथ वर्षति" । इति श्रुतेश्च ॥

सायणभाष्ये ( १ अ. २ सं. ३ सू. ) "ऋतस्य सदने सीदामि, ऋतपात्रमसि"—इति मन्त्रयोर्ऋतशब्दः सोमार्थः । द्रोणकलशस्य, सोमभाण्डस्य ऋतपात्रत्वेनाभिधानात् । तेन सोमसंभृता वाग्-ऋतम् । अग्निसंभृता वाक्सत्यम् । वाचः सर्वत्र व्याप्तत्वात् आकाशसंज्ञा । तत्राग्न्युष्णतो मर्त्यस्य सत्यं नाम । वस्तुन्यग्निरूपाधि । वस्तुसत्तया वाक्पदं सत्यं नाम । तदृते ऋतमिति । अन्यभावे स्वभावतः सोमव्याप्तिः । तदृतपदमिन्द्रापशुने हितं शून्यम् । स्वनामेन्द्रः । ( ईश्वर ) सर्वाकाशव्यापी । अग्नीरेतोधाः सोमस्तारतम्यादुपपन्न ऋतुः । आपोऽप्यक्षसद्म्यः । उत्तरादिग् ऋतसद्मम् सौम्यत्वात् ॥

प्राणो यद्दिस्नेहगुणः ससोमः स्थौल्यात् सवायुः पुनराप एताः ।
तेजो गुणोऽग्निर्द्विधि वाक् स इन्द्रः स्थौल्याद् यमोऽग्निः पृथिवीयमग्निः ५॥
१ प्राणः १ वाक्—२ वायुः २ तेजः—३ आप ३ पृथ्वी ।
पृथ्वी जलं तेज उतैप वायुश्चाकाशसोमाविति भूतवर्ग ॥
व्यासक्तरूपाणि तदित्थमेतान्यृतानि सत्यानि जगत्स्वरूपम् ॥ ६ ॥

दिव्योऽग्निरिन्द्रस्तत एव पूर्ण सत्यं ततो रिक्तमृतं प्रतीयात् ॥
यश्चास्ति सूर्यस्य रसः स सत्यस्ततोऽतिरेकादृतमेव सर्वम् ॥ ७ ॥
यद्वारुणं चान्द्रमिदं च भौमं तन्मण्डलं सर्वमृतं वदामः ॥
ऋतं निशा भौमरसाऽथ सोमादुदक् प्रतीची वरुणाद् ऋतं स्यात् ॥ ८ ॥
आपश्च सोमोऽग्निरयं च सोमः सर्वेऽप्यमी नूनमृते वसन्ति ॥
रसस्य सौरस्य निधानमस्मिन्नृते न सत्येत्वृतमाहितं स्यात् ॥ ९ ॥
४ न चास्ति तद्धाम न यत्र सोमस्ततं हि सोमेन समन्ततः खम् ॥
तद्धाम साधारणमस्ति तस्मिन् क्वचित्क्वचिन्मण्डलमस्ति चाग्ने ॥ १० ॥
अग्निर्बृहन्मण्डलमल्पकं वा यावत्तनोतीह तदस्ति सत्यम् ॥
ऋते तु तन्मण्डलतोऽग्निरिक्तं यद्धाम तत्सर्वमृतं प्रतीयात् ॥ ११ ॥
देवा इदं विश्वमभीभिरेव ग्रन्थी भवद्भिर्हि मिथोऽनुबन्धात् ॥
पिण्डा अभूवन्निखिलास्त एते देवाश्च सोमाग्निभिदा द्विधा स्युः ॥ १२ ॥
ये वा यतो याः पुनराप एते सोमाश्च भूतानि च सोम एव ॥
यमोऽग्निरादित्य इति त्रयोऽपि स्युरग्निभेदा न परोऽस्त्यमीभ्यः ॥ १३ ॥
सोमप्रभेदा इह चन्द्रलभ्याश्चन्द्रो हि तत्संग्रहरूपपिण्डः ॥
अग्निप्रभेदास्त्विह सूर्यलभ्याः सूर्यो हि तेषामुपसंग्रहोऽस्ति ॥ १४ ॥
८ अग्निर्द्विधा यः प्रलयावधिः स्यात् संवत्सरः सौर इहैव सत्यः ॥
ऋतस्तु संवत्सर एव भौमः सोमाद् विशेषाकृतिभाग् ऋतुः सः ॥ १५ ॥
यः पार्थिवोऽग्निस्तमृतं प्रतीयादादित्यमग्निं तु वदन्ति सत्यम् ॥
असावयं चाग्निरिवैकरूपस्तस्माद् ऋतं सत्यमभिन्नमाहुः ॥ १६ ॥
अथापि वा पार्थिव एव सोऽग्निर्द्विधास्ति सूर्याग्नियुतः स सत्यः ॥
सोमान्वयादन्तरितस्त्वृतः स्याद्यथाचि सत्योऽयमृतोऽस्त्युदीचि ॥ १७ ॥
रात्रिस्त्वृतं स्यादिह चन्द्रमूलं सत्यं त्वहः स्यादपि सूर्यमूलम् ॥
कृष्णं च शुक्लं तदनं च सत्यं रात्रिस्त्वहश्चेति ततोऽस्ति सृष्टिः ॥ १८ ॥
उभे अपीमे अहनी भवेतामहश्च कृष्णं ह्यहरर्जुनं च ॥
पठन्ति कृष्णोऽहनि रात्रिशब्दं न कालमात्रे तु तयोः प्रयोग ॥ १९ ॥
२ *मूर्तस्तु कालो द्विविधोऽग्निसोमप्रभेदतस्तावपि शुक्लकृष्णौ ॥
योऽग्निः स शुक्लस्त्वदहः प्रतीयात् सोमस्तु कृष्णः स हि रात्रिशब्दः ॥ १ ॥

---

अहोरात्रे वा अग्नीषोमौ । तमाहुर्द्विरूप. स्याच्छुक्ल च कृष्णं चाहोरात्रयोरूपेण । ( कौ-
१०। ३ ) ॥

कोपीनकीया इदमित्थमाहुस्तावग्निसोमावपि सूर्यचन्द्रौ ॥
सूर्योऽग्निरूपो भुवनं विचष्टे सौम्यो निधिश्चन्द्र ऋतुं तनोति ॥ २ ॥
*पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परियातो अध्वरम् ॥
विश्वान्यन्यो भुवनाभिचष्ट ऋतूरन्यो विदधज्जायते पुन ॥ ३ ॥
( मं १० सू. ८५ मं. १८ )

† नवो नवो भवति जायमानो अह्नां केतुरुषसामेत्यग्रम् ॥
भागं देवेभ्यो विदधात्यायन् प्रचन्द्रमास्तिरते दीर्घमायु ॥ ४ ॥
ऋतोऽस्ति सोमः किल तत्र तत्र वृद्धिक्षयाभ्यां कुरुते विशेषात् ॥
ऋतेर्विभागा ऋतवः षडेते भवन्ति सोमान्वयतारतम्यात् ॥ ५ ॥
अयस्तु सोमक्षयतारतम्या वसन्तपूर्वा ऋतवो भवन्ति ॥
सोमप्रवृद्धिक्रमतस्त्रयोऽन्ये सौम्यर्तवस्ते शरदादयः स्युः ॥ ६ ॥
ऋतेर्विभेदा ऋतवः षडेते संवत्सरस्यावयवा भवन्ति ॥
संवत्सरौ पार्थिव चान्द्रभेदाद् द्वौ सौरसंवत्सरगौ तु तौ स्तः ॥ ७ ॥
‡ द्वे ते चक्रे ब्रह्माण ऋतुथा विदु ॥
अथैकं चक्रं यद् गुहा तदद्धातय इद्विदु ॥ ८ ॥ ( १० । ८५ । १६ )
अत्यामूर्धि प्रोक्तमिदं त्रिचक्रं संवत्सरात्मेति वदन्ति केचित् ॥

---

* पूर्वापरमिति । पूर्वं गच्छति सूर्यं तमनुचरति चन्द्र । इत्थमेतावादित्यचन्द्रौ मायया स्व प्रज्ञानेन पौर्वापर्येण दिवि चरत तौ शिशू इवान्तरिक्षे–विहरन्तौ यज्ञं प्रतिगच्छत । तयोरेक आदित्य सर्वाणि जन्यजातान्यभिपश्यति । अन्यश्चन्द्रमा वसन्तादीनृतून् कुर्वन् पुन पुन-र्जायते ॥ चन्द्रस्य ह्रासवृद्धिसद्भावात् तदपेक्षयैव पुन पुनर्जायत इत्युक्ति । तैत्तिरीयसंहिता-यामप्युक्तम् "चन्द्रमा वै जायते पुन "–इति ।७ ।५ ।१६ । यद्यपि सूर्यस्य ऋतुजनकत्वं लोका मन्यन्ते तथापि सूर्यस्यैकरूप्यात् विशेषाद्नुजनकत्वं नास्ति चन्द्रमास्तु ह्रासवृद्ध्यादि विशेषशालीत्वसंयोगवियोगाभ्यां सूर्याग्नी तारतम्येनातिरेक सृजतीति तस्यैव ऋतुजनकत्वं वेद्यम् ॥ १ ॥

† नवो नव इति जायमानो वर्द्धमान सन् नवो भवतीति शुक्लपक्षाभिप्रायम् । अह्नां द्वादशानां तिथ्यंशानामुपलक्षक सन् मासादुपसामग्र सामीप्यमायातीति कृष्णपक्षाभिप्रायम् ॥ एवं द्वाभ्यां गतिभ्यामागच्छन् गतिं समापयन् दर्शे च पूर्णमासे च देवेभ्यो भाग विदधाति । देवेभ्यो भागदानाय यजमानस्यायु प्रतिरते प्रवर्द्धयति । अह्नां केतुरिति सूर्याभिप्रायं केचिद्योजयन्ति तद् भ्रान्तम् । सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चादिति श्रुत्या सूर्यस्योष पृष्ठगतिप्रसिद्धे । तस्मादयं संपूर्णो मन्त्रश्चन्द्रपरो द्रष्टव्य । पूर्वापरं नवो नव इति मन्त्रद्वयं सूर्याया सावित्र्या आर्षम् ॥ ८ । ३ । २३ ॥

‡ द्वे ते इति हे सूर्ये ते त्रिचक्र तव चन्द्रसूर्यात्मके द्वे चक्रे ऋतुषु विनिर्दिष्टे ब्राह्मणा जानन्ति । अथैकं तृतीयं संवत्सरात्मकं चक्रं गुहायां यन्निहितमस्ति तन्मेधाविन एव जानन्ति । तस्य दुर्ज्ञेयत्वाद् परोक्षत्वात् ॥ एतदपि सूर्याया आर्षम् ॥ मनोमयस्यानस इति ॥ "मनो अस्या अन आसीद् द्यौरासीदुत च्छदि । शुक्रावनड्वाहावास्तां यदयात् सूर्या गृहम्"–इति सावित्र्योक्तेर्मनस शकटरं सूर्यचन्द्रयो रथो रूपेण प्रकल्पितं वेदितव्यम् ॥

नावा न क्षोदः प्रदिशः पृथिव्याः स्वस्तिभिरतिदुर्गाणि विश्वा ॥
स्वां प्रजां बृहदुक्थो महित्वा वरेष्वदधादापरेषु" ॥ २६ ॥ ( १०। ५६। ७ );
एषां बलानां पितरश्च देवाश्चापीशते ते समचिक्यचुश्च ॥
क्रतुं च देवेष्वदधुः पृथक्तस्यानेमान् प्रमीताः प्रविशन्ति पश्चात् ॥ २७ ॥
लोकान् सहोभिर्निखिलानटन्ति पूर्वाणि धामान्यमितानि मात्वा ॥
यच्छन्ति तन्वा भुवनानि तानि प्रसारयन्ते बहुधा प्रजाश्च ॥ २८ ॥
ये स्वर्विदो येऽप्यथ राक्षसा इति द्वेधाऽसुराः स्वर्विदश्शुक्लचन्द्रमाः ॥
मासेन सौम्याश्चन्द्र आत्मनि प्रमादाश्शेरते, विंशतिरष्ट चाह्निकाः ॥ २९ ॥

---

मन्त्रचतुष्टयं व्याचष्टे म । १। १८॥ चयस्तु ब्रूम । महिम्न इति । एषां देवानां महत्त्वं पितरोऽपि समर्धन्ते । पितरोऽपि देवस्य प्रास्ता सन्तीति वा देववत् पितरोऽपि कर्म कुर्वन्तीति वा यत्र देवाः किञ्चित् कर्म कुर्युस्तत्र पितरोऽपि ससज्जन्ते इति वा तात्पर्यम् देवेष्वपि देवः तं प्रियो स्वीय यज्ञ निवेशयन्ति । सुत्या नामाहुतियत्र वा जुह्वति । यत्र कश्चिद्देव किञ्चित्कुरुते तत्रान्योऽपि देव समासज्य स्वयत्नेन किञ्चित्सह कुरुते । अत एव देवकर्मसु चेत्रज्ञात्मकर्मसु पितरोऽपि भागिनो भवन्ति । अथवा पितरोऽपि देवा इति कृत्वा पितरः पितृभिः संसज्य कर्म कुर्वन्तीत्यर्थः । यद्वा अग्न्यादिदेवेषु भौतिक सोमो हूयते स सुत्या यज्ञो भवति । किन्त्विह देवा एव देवरूपानेव सोममयान् पितॄन् स्वोत्पादितेऽग्नौ जुह्वति । न मनुष्या एव सोमं जुह्वति अपि तु देवा अपि देवेषु देवमयं क्रतु जुह्वतीत्यर्थः । यानीति प्रकरणात् सह करोति । याभिः सहांसि पितॄणां समवेत्य च परस्परेण सह सङ्गम्य व्यक्तिमगच्छन् तत् अपि चात्रयजीवनकालपर्यन्तम् अपि तु प्रदीप्यन्त प्रतिभासन्ते स्म । तानि वा अत्र केन चिरकालेन एतानेव पितॄणां तनूषु सपिण्डीकरणवेलायां निविविशु सतानां पितॄणां सहा स्येकत्रीभूय पुत्रपौत्रादितन्तुरूपेणाभिव्यक्तानि भूत्वा तन्मरणोत्तर तानि सह सि पुन स्ते तेष पितृषु भागशः प्रविशन्तीत्यर्थः । सम निम्यचुरिति वक्तव्ये कालदोषादनुस्वारपात ॥१९॥

सहोभिरिति । सह शब्द पुत्रपौत्रादिषु सूयमान पिण्डावयवव्यक्तिमाह । तन् शब्दो लोकवचन प्रकृते पुत्रपौत्रादिसन्तानशरीराभिप्राय । पूर्वशब्द पुत्रादिषु पिण्डभागाहुते पूर्वकालिकत्वं प्राह । धामशब्द पिण्डाभिप्राय । अमितानि व्यवच्छेदरहितानि । तनूष्विति तनुशब्देन सप्तषट्पञ्चचतुस्त्रिद्व्येकरूपा पितृसञ्ज्ञका पिण्डभागा विवक्षिता । भुवनशब्देन जायमाना सूनुसञ्ज्ञका पिण्डभागा गृह्यन्ते पुरुधेति बहुधार्थः । तेनायमर्थः । पत्नीशरीरे शुक्राहुते पूर्वकालिकानि सप्तषट्पञ्चादिव्यवच्छेदरहितानि पिण्डरूपाणि सप्त पञ्चादिव्यवच्छेदैर्व्यवच्छेदयन्त पितरः सर्वं पुत्रपौत्रादि समापत्यशरीरं सहोभिः वीर्यं परिचक्रमुः पर्याक्रामन् । तानि च भुवनानि पुत्रादिरूपेणोत्पद्यमानानि सूनुसञ्ज्ञकानि सहांसि तनूषु पितृशरीरेषु सप्तपञ्चादिरूपेषु न्ययमयन् । तन्नियतान्यकुर्वन् । एकविंशतिसप्तकेन पञ्चदश षट्केनैव जातं जातं भाग योषिच्छरीरे पद सन्धानमकुर्वन् ॥ अविच्छिन्नमूला येन तानि भुवनानि सूनुसहांसि प्रजा सप्तापत्यान्यनुप्रासारयन्त, तच्च प्रसारणं नैकरूपम् अपि तु कश्चिदधिकं कश्चिदल्पं कश्चित्तुल्यमिति विशेष द्विधानुत्तर इति । एकविंशत्यादि पिण्डभागैर्गुणीयमानाः पुत्रादय तृतीयेन कर्मणा पुत्रोत्पादनरूपेण स्वर्विदमसुरं सौम्यमहोरूप द्विधा व्यस्थापयन्त आत्मनीनमन्त्याज्यमन्यत् । तत्रनीयं त्याज्यमन्यत् । तत्राद्यं सप्तषट् पञ्चादिसङ्कलनयाऽष्टाविंशतिसंख्यम् । द्वितीयं त्वेकविंशति पञ्चदशादिसङ्कलनया षट्पञ्चाशत्संख्यम् । इत्थं कृत्वा पितरः स्वां प्रजामेकविंशतिभागरूपां, पिण्डैस्सह पञ्चदशादि

संतानितं सप्तविधं तदुरुक्रमात् पुनर्यदा स्योनिरुपेति तन्निजम् ॥
गोत्रेऽष्टमे स ततितन्तुसंग्रहात् संपद्यते स्वात्मनि पूर्णतागतम् ॥ ४२ ॥
स पुरुषः प्रैति यदा तदानीमयं महांश्चन्द्रमसि प्रयाति ॥
आसप्तमं पूरुषमत्र तिष्ठन् विमुच्यते संततिबन्धसूत्रैः ॥ ४३ ॥
चन्द्रस्थसोतृष्वथ चन्द्रगः सन् प्रत्यर्पयेद् यर्हि तदेष लब्धेः ॥
स्वैरष्टयुग्विंशतिबिन्दुभिस्तैर्विच्छिन्नसूत्रः स भवेदपत्यैः ॥ ४४ ॥
यतश्चतुर्थं किल कर्म धीयते संसृज्यते यत् त्रिषु पूर्वकर्मसु ॥
भूतैः पृथिव्या तदितोऽतिमुच्यते नास्य प्रजातन्तुरिहास्ति चाततः ॥४५॥
इत्थं पितृस्तोमगतिः सपिण्डता दरेषु सप्तस्वपरेषु चोदिता ॥
भूतात्मदिव्यात्मयुजोऽन्तरात्मनः सोमस्य नातः परतः स्थितिः क्वचित् ॥४६॥
पारादवाराच्च तटात् प्रजार्द्रं नावेव चान्द्र्याः प्रदिश पृथिव्याः ॥
दुर्गाणि तीर्णे स्थितिभिः प्रजासु सौम्योरसः स्वर्गिदिहासुरेऽस्ति ॥४७॥
यथा तु चन्द्रात् पृथिवीमुपैति यथा पृथिव्याः शशिनं प्रयाति ॥
एव स्वकीयं च सहो नरस्यापरेषु चायाति परेषु याति ॥ ४८ ॥
यदाततं सप्तसु पूरुषेषु श्रद्धानसूत्र प्रवदामि तां गाम् ॥
प्रत्यर्पणात् सोऽक्रियते तदासौ स्वयोनिमायाति जहाति यूथम् ॥ ४९ ॥

| | सपिण्डपुरुषाः | पिण्डस्य सहांसि | आप्यानि | सन्तानाः | | पिण्डभाजः पुरुषाः पितरः | अपुत्रे पितृसहांसि | सपुत्रे पितृसहांसि | |
|---|---|---|---|---|---|---|---|---|---|
| १ | आत्मनि | २८ | ७ | २१ | ७ | वृद्धातिवृद्धप्रपितामहस्य | १ | १ | ० |
| २ | पुत्रे | २१ | ६ | १५ | ६ | अतिवृद्धप्रपितामहस्य | ३ | २ | १ |
| ३ | पौत्रे | १५ | ५ | १० | ५ | वृद्धप्रपितामहस्य | ६ | ३ | ३ |
| ४ | प्रपौत्रे | १० | ४ | ६ | ४ | प्रपितामहस्य | १० | ४ | ६ |
| ५ | वृद्धप्रपौत्रे | ६ | ३ | ३ | ३ | पितामहस्य | १५ | ५ | १० |
| ६ | अतिवृद्धप्रपौत्रे | ३ | २ | १ | २ | पितुः | २१ | ६ | १५ |
| ७ | वृद्धातिवृद्धप्रपौत्रे | १ | १ | ० | १ | आत्मन | २८ | ७ | २१ |
| ८ | अष्टमे | ० | ० | ० | | | | | |
| | | ८४ | २८ | ५६ | | | ८४ | २८ | ५६ |

* "अव परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात् ॥
सा कद्रीची कंस्विदर्धं परागात् क्वस्वित् सूते न हि यूथे अन्तः ॥ २० ॥
मं. १ सू. १६४। ऋ. १७ ॥

एकस्त्रय षड् दश त्रिंश पञ्चदशैकविंशत्युदिता विभागाः ॥
स्युः सप्तमाद्व्युत्क्रमपूर्वपुम्भ्योऽष्टाविंशतिस्तु स्वगता विभागाः ॥ ५१ ॥
चतुर्युताशीतिमितैस्तदित्थं सौम्यैः सहोभिर्ध्रियते य आत्मा ॥
सोऽयं महांश्चन्द्रमसो हि लोकादुपेत्य योन्याहुतिभिश्चमेति ॥ ५२ ॥
प्रेत्येन्दुगश्चन्द्रमसस्तु धाम्ना कोऽसीति पृष्टः प्रतिवक्ति चन्द्रम् ॥
विचक्षणाः सोम इतो हि रेतो यदाभृतः सोऽहमिहार्तवोऽस्मि ॥ ५३ ॥
नाक्षत्रिकद्वादशमासरूपः संवत्सरः सोऽस्ति पिता स गर्भे ॥
देहं विनिर्मातीति तदेवमर्थं कौषीतकीया भगवन्त आहुः ॥ ५४ ॥

† "विचक्षणाद् ऋतवो रेत आभृतं पञ्चदशात् प्रसूतात् पित्र्यावत ॥
तं मा पुंसि कर्तर्येरयध्वं पुंसा कर्त्रा मातरि मासिषिक्त ॥ २५ ॥
स जायमान उपजायमानो द्वादश त्रयोदश उपमास ॥
द्वादशत्रयोदशेन पित्रा सं तद्विदे प्रति तद्विदेहम् ॥ २६ ॥
तन्म ऋतवो ऽमर्त्यव ऽआरभध्वं तेन सत्येन ॥
तपसा ऋतुरस्मि, आर्तवोऽस्मि, कोऽसि त्वमस्मि ॥ २७ ॥

यदस्ति किञ्चित् तदिदं समस्तं स्नेहश्च तेजश्च भवेद् द्विधैव ॥
आर्द्रं च शुष्कं च तदेतदाहुर्विद्यादहोरात्रत एव सर्वम् ॥ २८ ॥

[ शत. का. ९ प्र. ४। ब्रा. २। कं. २३ ]

यदस्ति तेजो यदिहास्ति शुष्कं तदग्निमूलं स च सूर्यमूलः ॥
तत्सोममूलं स च चन्द्रमूलः स्नेहो यदार्द्रं तदहश्च रात्रिः ॥ ५९ ॥
गायत्रिका ज्योतिरिदं ह्यहस्तत् पाप्मा तु रात्रिस्तम इत्यवेहि ॥
ज्योतिस्तदग्निस्तम एव सोमस्ताभ्यामिदं विश्वमभिव्यनक्ति ॥ ६० ॥

इति आर्तवाधिकरणम् ।

---

* अग्नावाहुतिर्गोरूपेण स्तूयते—अव परेणेति । आहुतिर्गोरूपा वत्सस्थानीयमग्निमवस्ताद्धोदेशे परेण स्वरूपेण परस्तादुपरिदेशे स्वनेनावरेण स्वपदेनाकृष्य बिभ्रती सती सूर्यं प्रत्युत्तिष्ठति । कद्रीची क्वगतेत्यनिश्चयगमना सा गौः कं विभागमगच्छत् । कुत्र वा प्रदेशे फलमुत्पादयति । इति न ज्ञायते । न ह्येषा गौः सजातीयगोमध्ये क्वचिद् दृश्यते इत्यर्थः ॥ अथवा सूर्यरश्मिरूपा गौर्वत्सस्थानीयं यजमानं पूर्वोक्तरीत्या बिभ्रती दिवं गच्छति । "त आयन्त्येता सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः"—इति श्रुतेः । इति सायणव्याख्या ॥

† विचक्षणादिति कौषीतकीयोपनिषदि श्रूयते । "असौ वै सोमो राजा विचक्षणश्चन्द्रमा"—इति कौषीतकिब्राह्मणे ७ अध्याये १० कण्डिकायाम् ( १२। २ च ) ॥ रेतः सोमः । ( कौ. ब्रा. १३। ७ ) ॥

